परैर्विविच्यमानानि पदार्थान्तराण्यपि बुद्धिमता बाधनीयानि। अत्र चाऽस्माभिर्दूषयितुं शङ्कितेभ्यः परपक्षप्रकारेभ्यो यदि प्रकारान्तरं कोऽपि स्वयमूहति उक्तानां बाधकानां मध्ये मध्ये क्वचित्प्रज्ञयाऽपि समाधानमभिदध्यात्तत्र खण्डनवादिनः प्रस्तुता प्रतिक्रिया न स्फुरेत्तदा परेण प्रयुज्यमाने वाक्ये बहुपदात्मके कस्यचित्पदस्यार्थे खण्डनान्तरमवतारणीयम्। एवं तत्रापि परेण प्रज्ञाशोषणे पुनस्तथैव शाखान्तरेषु सङ्क्रमणीयमिति प्रकारेण खण्डनमये चक्रे सम्यगवधेयम्। न च शाखान्तरसङ्क्रान्तावर्थान्तरं पतेत्, अप्रकृतत्वाभावात्। नचैकनिर्णयारम्भेऽन्यसङ्क्रान्तावनौचित्यं स्यात्। शब्दोऽनित्यः कृतकत्वादित्यादौ परेणोक्ते कृतकत्वादावविप्रतिपत्तव्यत्वापत्तेरन्यतरासिद्ध्युच्छेदापातात्। येन हि तन्निर्वाह्यते तदनिर्वचनीयतयाऽपि निर्वाह्यानिर्वचनीयतैवेति। तस्मात्—

तत्तुल्योहस्तदीयं च योजनं विषयान्तरे।
शृङ्खला तस्य शेषे च त्रिधा भ्रमति मत्क्रिया॥ ९४॥

ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया,
प्राज्ञम्मन्यमना हठेन पठिती माऽस्मिन् खलः खेलतु।
श्रद्धाऽऽराद्धगुरुः श्लथीकृतदृढग्रन्थिः समासादयन्
त्वेतत्तर्करसोर्मिमज्जनसुखेष्वासञ्जनं सज्जनः॥

---

धान भी करे और खण्डनवादी को प्रस्तुत समाधान की स्फूर्ति न हो, तो वादी से प्रयुक्त बहुपदात्मक वाक्य के किसी पद के अर्थ के खण्डन के अर्थ खण्डनान्तर का अवतरण करना चाहिये। और इसी प्रकार से वहां भी यदि वादी प्रज्ञा का शोषण [ निष्प्रतिभा ] करे, तो पुनः उक्तप्रकार से अन्य शाखा का अवलम्बन करना चाहिये। अन्य शाखा के अवलम्बन से अर्थान्तर भी नहीं होगा, कारण कि अन्य शाखा भी प्रस्तुत ही है। और अप्रस्तुत अन्य अर्थ का अवलम्बन, अर्थान्तर है। तथा एक पदार्थ के निर्णय के आरम्भ में अन्यपदार्थ के संक्रमण में अनौचित्य भी नहीं है, कारण कि अनौचित्य भी अप्रस्तुत अन्य के अवलम्बन में ही होता है, अन्यथा यदि प्रस्तुत विषय में भी अर्थान्तर वा अनौचित्य हो, तो शब्द में कृतकत्व से अनित्यत्व के साधन के प्रस्ताव में कृतकत्व में भी विप्रतिपत्ति ( जिज्ञासा ) अर्थान्तर के भय से नहीं होगी। तथा अन्यतरासिद्धि स्थल का उच्छेद हो जायगा, कारण कि अन्यतर के प्रति, हेतु के असिद्धिस्थल में हेतु को यदि सिद्धि करें तो अर्थान्तर वा अनौचित्य हो जायगा अतः साध्य के साधन के प्रस्ताव में हेतु का साधन कोई नहीं करेगा और वस्तुतः हेतु का निरूपण प्रस्तुत ही है। कारण कि जिस हेतु से जो निरूपित होता है उस हेतु के अनिर्वचनीयत्व से साध्य का अनिर्वचनीयत्व सिद्ध होता है तस्मात् मदुक्तयुक्ति के तुल्य अन्ययुक्तियों की ऊहा तथा अन्यत्र उक्त मदुक्त युक्तियों के अन्यत्र योजन, तथा उन युक्तियों के खण्डन होने पर शृङ्खला शाखान्तरारोहण इस प्रकार से मेरी खण्डन प्रक्रिया वाद मे त्रिधा भ्रमण करती है॥ ९४॥

इस ग्रन्थ में कहीं कहीं प्रयत्न रचना का काठिन्य हमने इस प्रयोजन से किया है कि जो प्राज्ञम्मन्य है वस्तुतः प्राज्ञ नहीं है तथा हठ से पढ़ने वाले हैं, वे खल जन इस ग्रन्थ में

ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरात्
यः साक्षात्कुरुते समाधिषु परब्रह्मप्रमोदार्णवम् ॥
यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याऽभ्युदीयादियम् ॥ ६५ ॥

इति श्रीकवितार्किकचक्रवर्ति-श्रीश्रीहर्षकृतानिर्वचनीयसर्वस्वे
खण्डनखण्डखाद्ये तुरीयः परिच्छेदः समाप्तः ॥

---

क्रीड़ा न करें। किन्तु श्रद्धा से आराधित गुरुओं से विघटित है ग्रन्थ काठिन्य जिनसे ऐसे सज्जन विद्वान् ही मदुक्त तर्क की रसरूपी उर्म्मी में मज्जन सुख में प्रेम का लाभ करें।

कान्यकुब्ज देश के महाराज से ताम्बूल की दो बीड़ी तथा आसन जो पाते हैं, तथा समाधि में आनन्दरूप ब्रह्म का साक्षात्कार जो करते हैं, तथा जिनके काव्य मधु के वर्षणकारी होते हैं तथा परपक्ष के खण्डन करने वाले तर्कों में जिसकी उक्तियां हैं, उस श्री श्रीहर्ष कवि का यह ग्रन्थ पण्डितों के आनन्द के अर्थ प्रकट हुआ है ॥ ६५ ॥

गौरीशंकरश्रेष्ठिनात्रखुरजारत्नेन काश्यां मुदा
जोखीरामपितामहस्य मटरूमल्लस्य तातस्य च।
नामालङ्कृतनामसंस्कृतमहाविद्यालयः स्थापितः
तत्सेवाधिकृतः तदेककरणः चण्डीप्रसादो द्विजः ॥१॥

क्वाहं कुत्र च खण्डनस्य सुदृढग्रन्थिप्रमोकेच्छया,
प्रारम्भो विकटश्रमश्च जननीभाषानुवादस्य मे।
यद्यप्येवमथापि पूर्णकृपया श्रीशस्य संख्यावतां
कारुण्यैकधियां विधाय करयोरेषोऽर्प्यते सादरम् ॥२॥

काशीस्थ श्रीजोखीराममटरूमल्लगोयनका संस्कृत-महाविद्यालय-प्रधानाध्यापक श्रीचण्डीप्रसाद सुकुल रचित खण्डनखण्डखाद्य-भाषानुवाद समाप्त।

---